स्पृक् । कर्मणीति निवृत्तम् । मन्त्रेण स्पृशतीति मन्त्रस्पृक् । 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च' ( सू ३७३ ) व्याख्यातम् । 'त्यदादिषु दृशोऽनालोचने कञ्च' ( सू ४२९ ) । 'समानान्ययोश्चेति वाच्यम्' ( वा २०२९ ) सदृक्, सदृशः । अन्यादृक्, अन्यादृशः । 'क्सोऽपि वाच्यः' ( वा २०३० ) । तादृक्षः । सदृक्षः । अन्यादृक्षः । २९७५ सत्सूद्विषद्रुहदुहयुजविदभिदच्छिद-

भविता । स्पृशोऽनुदके क्विन्निति । व्याख्यातं हलन्ताधिकारे । निवृत्तमिति । अत्र व्याख्यानमेव शरणम् । समानान्ययोश्चेति । अनयोरुपपदयोः दृशः क्विन्कञावित्यर्थः । सदृक्, सदृश इति । समानो दृश्यते इति न विग्रहः, कर्तर्येव क्विन्विधानात् । किन्तु कर्मकर्तरि क्विन्कञौ । समानः पश्यतीति विग्रहः । समानत्वेन ज्ञानविषयो भवतीत्यर्थ इति भाष्ये स्पष्टम् । 'दृग्दृशवतुषु' इति समानस्य सभावविकल्पः । तत्र 'विभाषोदरे' इत्यतो विभाषानुवृत्तेः समानदृक् सदृक् समानदृशः सदृश इति भाष्याच्च । अन्यादृगिति । 'आ सर्वनाम्नः' इत्यात्वम् । क्सोऽपीति । त्यदादिषु समानान्ययोश्च दृशेः क्सोऽपि वाच्य इत्यर्थः । सत्सूद्विष । सद्, सू, द्विष, द्रुह, दुह, युज, विद, भिद, छिद, जि, नी, राज् एषां द्वन्द्वात्पञ्चम्यर्थे षष्ठी । अनुपसर्गे इत्यस्य निवृत्त्यैव सिद्धे उपसर्गेऽपीति वचनम् 'अन्यत्र सुब्ग्रहणे उपसर्गग्रहणं नेति' ज्ञापनार्थम् । तेन 'वदः सुपि क्यप् च' इति विधिरुपसर्गे न भवतीति

बन्धसामर्थ्यादस्यापि ग्रहणमस्त्विति किमिकारेणेति चिन्त्यमेतत् । न चेह लाघवाभावादिकारोस्तु चकार एव मास्त्विति शङ्क्यम्, एकमात्रो ह्रस्वो व्यञ्जनं त्वर्धमात्रकमिति सर्वसंमतत्वात् । यत्तु हरदत्तेनोक्तं षत्वणत्वयोः सामर्थ्यादस्य ग्रहणमिति तदापाततः स्नुजपेक्षया ष्णुजुक्तौ प्रत्युत प्रक्रियालाघवेन षत्वणत्वयोः करणस्योचिततया सामर्थ्यायोगादिति दिक् । निवृत्तमिति । ननु स्पृशेः सकर्मकत्वात्कर्मण्युपपद इत्येव प्राप्येत इति चेत् । अत्र प्राञ्चः—पूर्वसूत्रात्कर्तरि इत्यनुवर्तते सा चानुवृत्तिः 'कर्तरि कृत्' इत्यनेनैव कर्तरि क्विनः सिद्धत्वाद्व्यर्था सती कर्तृप्रचयार्था, कर्मण्युपपदे एकः कर्ता करणादौ चापर इत्येवं कर्तृप्रचयस्तथा च सुबन्ते उपपदे इति फलितं भवतीति मन्त्रस्पृगित्याद्यपि सिद्धमिति । वस्तुतस्तु कर्तृग्रहणं व्यर्थमिति पूर्वसूत्र एवोक्तम् । न चेह कर्तृप्रचयार्थं तदावश्यकमिति शङ्क्यम्, मन्त्रस्पृगित्यादेः क्विपापि सिद्धेः । न च क्विपि कुत्वं न स्यादिति वाच्यम् । क्विन्प्रत्ययो यस्मादिति बहुव्रीहिबलादेव कुत्वसंभवादिति दिक् । सदृगिति । तमिवेमं पश्यन्ति जनाः स इवायं पश्यति ज्ञानविषयो भवतीति व्युत्पत्त्या कर्मकर्तरि प्रत्ययो रूढ्यर्थानुगुणत्वात् । सत्सूद्विष । षद्लृ विशरणादौ । सू इति द्विषा साहचर्यात्सूतेरादादिकस्य ग्रहणं न

**सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्।** ( ३-२-६१ ) एभ्यः क्विप्स्यादुपसर्गे सत्यसति च सुप्युपपदे। द्युसत्। उपनिषत्। अण्डसूः। प्रसूः। मित्रद्विट्। प्रद्विट्। मित्रध्रुक्। प्रध्रुक्। गोधुक्। प्रधुक्। अश्वयुक्। प्रयुक्। वेदवित्। निविदित्यादि। 'अग्रग्रामाभ्यां नयतेर्णो वाच्यः' ( वा ४०६४ )। अग्रणीः। ग्रामणीः। २९७६ **भजो ण्विः।** ( ३-२-६२ ) सुप्युपसर्गे चोपपदे भजेर्ण्विः स्यात्। अंशभाक्। प्रभाक्। २९७७ **अदोऽनन्ने।** ( ३-२-६८ ) विट् स्यात्। आममत्ति आमात्। सस्यात्। अनन्ने किम्-अन्नादः। २९७८ **क्रव्ये च।** ( ३-२-६९ ) अदेर्विट्। पूर्वेण सिद्धे वचनमणबाधनार्थम्। क्रव्यात्। आममांसभक्षकः। कथं तर्हि 'क्रव्यादोऽस्रप आशरः' इति। पक्वमांस-

---

भाष्ये स्पष्टम्। **द्युसदिति।** दिवि सीदतीति विग्रहः। 'सात्पदाद्योः' इति न षत्वम्। 'पूर्वपदात्' इति षत्वं तु न भवति, तस्य च्छान्दसत्वाद् 'आदितेया दिविषदः' इत्यत्र सुषामादित्वात् षत्वमित्याहुः। **उपनिषदिति।** 'सदिरप्रतेः' इति षत्वम्। **इत्यादीति।** काष्ठभित्, रज्जुच्छित्। शत्रुजित्, 'ह्रस्वस्य पिति-' इति तुक्। सेनानीः, विराट्। **अग्रग्रामाभ्यामिति।** असमानपदत्वादप्राप्ते णत्वे वचनम्। **भजो ण्विः।** सुपि उपसर्गे चोपपदे भजेर्ण्विरित्यर्थः। **अंशभागिति।** णित्वा-दुपधावृद्धिः। **अदोऽनन्ने।** **विट् स्यादिति।** शेषपूरणमिदम्। अन्नशब्दभिन्ने सुप्युपपदे अदेर्विट् स्यादिति फलितम् 'जनसनखनक्रमगमो विट्' इति छान्दस-सूत्राद्विडित्यनुवर्तते। **सस्यादिति।** सस्यमत्तीति विग्रहः। **अन्नाद इति।** कर्मण्यण्। **क्रव्ये च।** **अदेर्विडिति।** शेषपूरणमिदम्। **अणबाधना-र्थमिति।** क्रव्ये अदेर्विडेव न त्वणित्यर्थलाभादिति भावः। **कथं तर्हीति।** क्रव्ये

---

तु सुवतिसूयत्योः। युजिर् योगे, युज समाधौ, द्वयोरपि ग्रहणम्। विद ज्ञाने, विद विचारणे, विद सत्तायाम्, त्रयाणामपि ग्रहणम्। विद्लृ लाभे इत्यस्य तु न ग्रहणम्। विदेत्यकारस्य विवक्षितत्वात्। **द्युसदिति।** 'पूर्वपदात्-' इति षत्वं तु न भवति छन्दसीत्यनुवृत्तेः। तथा च माघः—'मनस्सु येन द्युसदां न्यधीयत'. इति। 'आदि-तेया दिविषदः' इत्यत्र तु सुषामादित्वात्षत्वमिति माधवादयः। उपनिषदित्यत्र तु 'सदिरप्रतेः' इति षः। **अग्रग्रामाभ्यामिति।** 'स एषां ग्रामणीः' इति निर्देशेन ज्ञापितमेतत्। नीरूपप्रत्ययविषयत्वे चेदम्, तेन कर्मण्यणि णत्वं न भवति। ग्रामनायः। ज्ञापकस्य सामान्यविषयत्वाद् अग्रशब्दोपपदादपि णत्वं तेनाग्रणीरित्यपि सिद्धमि-त्याहुः। **अदोऽनन्ने।** **विट् स्यादिति।** 'जनसनखनक्रमगमो विट्' इति पूर्व-सूत्रानुवृत्तेः पूर्वसूत्रं त्विह नोपन्यस्तम्। तत्र हि 'छन्दसि सहः' इत्यतश्छन्दसीत्य-

शब्दे उपपदेऽण्। उपपदस्य क्रव्यादेशः, पृषोदरादित्वात्। २९७९ दुहः कब्घश्च। ( ३-२-७० ) कामदुघा। २९८० अन्येभ्योऽपि दृश्यन्ते। ( ३-२-७५ ) छन्दसीति निवृत्तम्। मनिन्, क्वनिप्, वनिप्, विच् एते प्रत्ययाः धातोः स्युः। २९८१ नेड्वशि कृति। ( ७-२-८ ) वशादेः कृत इण्न स्यात्। शॄ, सुशर्मा। प्रातरित्वा। २९८२ विड्वनोरनुनासिकस्याऽऽत्। ( ६-४-४१ ) अनुनासिकस्य आत्स्यात्। विजायत इति विजावा। ओण्, अवावा। विच्, रोट्। रेट्। सुगण्। २९८३ क्विप् च। ( ३-२-७६ ) अयमपि दृश्यते। 'सत्सूद्विष—' ( सू २९७५ ) इति स्वस्यैव प्रपञ्चः। उखा-

---

उपपदे अदेर्विडेवेति नियमादणोऽसंभवादित्याक्षेपः। समाधत्ते पक्वमांसशब्द इति। तर्हि पक्वमांसाद इति स्यादित्यत आह उपपदस्य क्रव्यादेश इति। कुत इत्यत आह पृषोदरादित्वादिति। दुहः कब्घश्च। सुप्युपपदे दुहः कप्स्यात् प्रकृतेर्घश्चान्तादेश इत्यर्थः। कामदुघेति। धेनुरिति शेषः। काममपेक्षितं दुग्धे इति विग्रहः। अन्येभ्योऽपि दृश्यन्ते। 'विजुपे छन्दसि' 'आतो मनिन्क्वनिब्वनिपश्च' इत्यधिकारे इदं सूत्रम्। निवृत्तमिति। व्याख्यानादिति भावः। मनिनि अन्यो नकार इत्, इकार उच्चारणार्थः। क्वनिपि वनिपि च पकार इत्, इकार उच्चारणार्थः। नेड्वशि कृति। षष्ठ्यर्थे सप्तम्यौ। वशा कृद्विशेष्यते। तदादिविधिः, तदाह वशादेरिति। सुशर्मेति। शॄधातोर्मनिन्। प्रातरित्वेति। इणधातोः क्वनिप्। विड्वनोरनुनासिकस्याऽऽत्। विड्वनोरिति सप्तमी। अनुनासिकस्य आदिति छेदः। विजावेति। जनेर्वनिप्। जनेर्नकारस्य आकारः। सवर्णदीर्घः। अवावेति। ओणेर्वनिप्। णकारस्य आकारः अवादेशः। विजिति। उदाह्रियते इति शेषः। रोट् रेडिति। 'रुष, रिष हिंसायाम्' विच्। 'वेरपृक्तस्य' इति वलोपः। सुगणिति। गणेर्विच्। क्विप् च। अयमपीति। सर्वधातुभ्यः सोपपदेभ्यः निरुपपदेभ्यश्च छन्दसि लोके च क्विब् दृश्यते इत्यर्थः।

---

नुवर्तनात्। कामदुघेति। धेनुरिति शेषः। कामं दोग्धीति विग्रहः। अन्येभ्योऽपि दृश्यन्ते। इह 'विजुपे छन्दसि' इत्यतो विच् प्रत्ययः। 'आतो मनिन्-' इति सूत्रान्मनिनादयश्चानुवर्तन्ते, तदाह मनिन्क्वनिबित्यादि। सुशर्मेति। सुष्ठु शृणातीति विग्रहः। प्रातः एतीति प्रातरित्वा। इणः क्वनिपि 'ह्रस्वस्य पिति—' इति तुक्। अवावेति। अनुनासिकस्य आत्वे अवादेशः। सौ दीर्घनलोपौ। रोट् रेडिति। रुष रिष हिंसायाम्। उपधागुणः। जश्त्वचर्त्वे। वाहभ्रडिति पाठः। वाहादश्वाद् भ्रश्यतीति विग्रहः। वृत्तौ तु वाहभ्रडिति पाठः। वहः स्कन्धः 'अन्येषा-

स्रत्। पर्णध्वत्। वाहभ्रट्। २६८४ अन्तः। (८-४-२०) पदान्तस्यानितेर्नस्य णत्वं स्यादुपसर्गस्थान्निमित्तात्परश्चेत्। हे प्राण्। 'शास इत्-' (सू २४८६) इतीत्त्वम्। मित्राणि शास्ति मित्रशीः। 'आशासः क्वौ उपधाया इत्वं वाच्यम्'। (वा ४०७०) आशीः। इत्वोत्वे। गीः। पूः। २६८५ इसमन्त्र-

---

नन्वनेनैव सिद्धे 'सत्सूद्विष-' इति सूत्रे व्यर्थमित्यत आह सत्सूद्विषेति। 'सत्सूद्विष-' इति सूत्रं तु 'क्विप् च' इत्यस्यैव प्रपञ्च इत्यर्थः। उखास्रदिति। उखायाः स्रंसत इति विग्रहः। स्रंसेः क्विप्, 'अनिदिताम्-' इति नलोपः, 'वसुस्रंसु-' इति दत्वम्। एवं पर्णध्वत्। पर्णाद् ध्वंसत इति विग्रहः। वाहभ्रडिति। वाहाद् भ्रश्यति इति विग्रहः। व्रश्चादिना षः। अन्तः। 'अनितेः' इति सूत्रमनुवर्तते, 'रषाभ्यां नो णः-' इति च। अन्त इति षष्ठ्यर्थे प्रथमा। पदस्यान्तो विवक्षितः। 'उपसर्गादसमासेऽपि' इत्यत उपसर्गादित्यनुवर्तते। तदाह पदान्तस्येत्यादिना। हे प्राणिति। प्रपूर्वादनेः क्विबन्तात् संबोधनैकवचनस्य हल्ङ्यादिलोपः, नस्य णः। नलोपस्तु न, 'न ङिसंबुद्ध्योः' इति निषेधात्। मित्रशीरिति। मित्राणि शास्तीति विग्रहः। शासेः क्विप् 'शास इदङ्हलोः' इत्युपधाया इत्वम्, 'र्वोरुपधायाः-' इति दीर्घः। मित्रशिषावित्यादौ अपदान्तत्वान्न दीर्घः। आशासः क्वाविति। 'आङः शासु इच्छायाम्' इत्यात्मनेपदी। तस्य 'शास इदङ्हलोः' इति इत्वं तु न भवति, अत्र परस्मैपदिन एव शासेर्ग्रहणात्। अन्यथा आशास्ते इत्यादावपि इत्वापत्तेः। अत आशासः क्वाविति विधिः। इत्वोत्वे इति। गृधातोः क्विपि, ऋत इत्वे, रपरत्वे, सोर्लोपे, 'र्वोरुपधायाः-' इति दीर्घे गीरिति रूपम्। पृधातोः क्विपि, 'उदोष्ठ्यपूर्वस्य' इति ऋतः उत्वे, रपरत्वे, सुलोपे, उपधादीर्घे पूः इति रूपमित्यर्थः। इस-

---

मपि दृश्यते' इति पूर्वपदान्तस्य दीर्घ इति हरदत्तः। अन्तः। अनितेरिति वर्तते अन्तश्चोत्तरपदापेक्षो गृह्यते नानितेरपेक्षयाऽव्यभिचारादत आह पदान्तस्येति। हे प्राणिति। अन प्राणने क्विप् 'अनुनासिकस्य-' इति दीर्घः।
इति नलोपनिषेधः। अन्यत्र तु नलोपेन भाव्यमिति संबुद्ध्यन्तमुदाहृतम्। मित्रशीरिति। लुप्तेऽपि क्विप्प्रत्यये प्रत्ययलक्षणन्यायेन हलादिक्ङित्प्रत्ययपरत्वमस्ति, वर्णाश्रये नास्ति प्रत्ययलक्षणमित्येतद्वर्णप्राधान्य एवेत्युक्तत्वादिति भावः। आशास इति। शासु अनुशिष्टौ, आङः शासु इच्छायाम्, आत्मनेपदे 'शास इत्-' इत्यादिना सिद्धे क्वावेव उपधाया इत्वमिति नियमार्थमिदम्। तेन आशास्ते इति सिद्धमित्येके। अन्ये तु विध्यर्थमेवेदं न नियमार्थं प्राप्त्यभावात्। न च 'शास इदङ्हलोः' इति इत्वस्य प्राप्तिरस्तीति वाच्यम्, तत्राङ्साहचर्यात्परस्मैपदिन एव शासेर्ग्रहणात्। यद्यपि 'सर्ति-

न्क्विषु च। ( ६-४-९७ ) एषु छादेर्ह्रस्वः स्यात्। तनुच्छत्। 'अनुनासिकस्य क्वि-' ( सू २६६६ ) इति दीर्घः। 'मो नो धातोः' ( सू ३४१ )। प्रतान्। प्रशान्। 'च्छ्वोः-' ( सू २५६१ ) इत्यूठ्। अक्षद्यूः। 'ज्वरत्वर-' ( सू २६५४ ) इत्यूठ्। जूः जुरौ जुरः। तूः। स्रूः। ऊठ्, वृद्धिः, जनानवतीति जनौः। जनावौ जनावः। मूः मुवौ मुवः। सुमूः सुम्वौ सुम्वः। 'राल्लोपः' ( सू २६५५ )। मुर्छा-मूः मुरौ मुरः। धुर्वी-धूः। २९८६ गमः क्वौ। ( ६-४-४० ) अनुनासिकलोपः स्यात्। अङ्गगत्। 'गमादीनामिति वक्तव्यम्'

न्त्रन्। इस्, मन्, त्रन्, क्वि एषां चतुर्णां द्वन्द्वः। 'छादेर्घेऽद्व्युपसर्गस्य' इत्यतः छादेरिति 'खचि ह्रस्वः-' इत्यतो ह्रस्व इति चानुवर्तते, तदाह एषु छादेरिति। अर्थादाकारस्येति गम्यते, अलोन्त्यपरिभाषामाश्रित्य इकारस्य ह्रस्वविधौ प्रयोजनाभावात्। एवं च 'ऊदुपधायाः-' इत्यत उपधाया इति नानुवर्तनीयम्, णयन्तस्य छादेर्दकारोपधत्वात्। इस् छदिः, मन् छद्म, त्रन् छत्त्रम्। क्वौ उदाहरति तनुच्छदिति। तनुं छादयतीति विग्रहः। अथ तनेः शमेश्च क्विपि विशेषमाह अनुनासिकस्येति। अक्षद्यूरित्यत आह च्छ्वोरिति। अक्षैर्दीव्यतीति विग्रहे दिव्धातोः क्विपि वकारस्य ऊठि इकारस्य यणिति भावः। ज्वरेति। ज्वरधातोः क्विपि अकारवकारयोरेकस्मिन् ऊठि जूरिति रूपम्। स्रिवेः क्विपि इकारवकारयोरूठि स्रूरिति रूपम्। अवधातोः क्विपि अकारवकारयोरूठि ऊरिति रूपम्। वृद्धिरिति। जनानवतीति विग्रहः, अवेः क्विपि, अकारवकारयोरूठि, जन ऊ इति स्थिते, आद्गुणं बाधित्वा 'एत्येधत्यूठ्सु' इति वृद्धिरौकारादेश इत्यर्थः। मूरिति। मवेः क्विपि, अकारवकारयोरूठ्। सुम्वौ सुम्व इति। अनेकाच्त्वाद् गतिपूर्वत्वाच्च यणिति भावः। रादिति। मुर्छाधातोः क्विपि 'राल्लोपः' इति छकारस्य लोपे सुलोपे 'र्वो -' इति दीर्घे मूरिति रूपम्। मुरौ मुर इति। अपदान्तत्वान्नोपधादीर्घः। धुर्वीति। धुर्वीधातोः क्विपि 'राल्लोपः' इति वकारस्य लोपे सुलोपे 'र्वोः-' इति दीर्घे धूरिति रूपमिति भावः। गमः क्वौ। अनुनासिकलोपः स्यादिति। शेषपूरणमिदम्। 'अनुदात्तोपदेश-' इत्यतस्तदनुवृत्तेरिति भावः। झलादिप्रत्ययपरकत्वाभावाद् अनुदात्तोपदेशेत्य-

शास्ति-' इति सूत्रे पृथग् योगकरणादर्तेर्लुङि आरत समारतेति पदद्वयेऽप्यङिति सिद्धान्तस्तथाप्युत्तरार्थतया परस्मैपदग्रहणानुवृत्तेरप्याकरे स्पष्टतया परस्मैपदे दृष्टो यः शासिस्तस्मात्परस्याङिति निष्कर्षः। तथा चाशास्ते इत्यत्र इत्वप्रसक्तिरेव नास्तीत्याहुः। वस्तुतस्तु 'आशिषि लिङ्लोटौ', 'क्रियाशीःप्रैषेषु' इत्यादिनिर्देशेनैव सिद्धमिति नेदमपूर्वं वार्तिकम्। ततश्च इत्वं वाच्यमित्यस्य इत्वं व्याख्येयमित्यर्थः। आशिषीत्यादु-

( वा ४०७६ )। पुरीतत्। संयत्। सुनत्। 'ऊ च गमादीनामिति वक्तव्यं लोपश्च' ( वा ४०७३-७४ )। अग्रेगूः। अग्रेभ्रूः। २६८७ **स्थः क च।** ( ३-२-७७ ) चात्क्विप्। शंस्थः। शंस्थाः। 'शमि धातोः-' ( सू २९२८ )

---

प्राप्तौ वचनम्। **अङ्गगदिति।** अङ्गाख्यं देशं गच्छतीति विग्रहः। क्विपि मकारलोपे तुक्। एवं वङ्गगत्कलिङ्गगदित्यादि। **गमादीनामिति।** क्वावनुनासिकलोप इति शेषः। **पुरीतदिति।** पुरिः हृदयाख्यः मांसखण्डविशेषः। तं तनोति आच्छादयतीति विग्रहः। हृदयकमलाच्छादको मेदोविशेषः। 'पुरीतता हि हृदयमाच्छाद्यते' इति श्रुतिरिति कर्किभाष्यम्। तनेः क्विपि नकारलोपे तुक्। 'नहिवृतिवृषि-' इति पूर्वपदस्य दीर्घः। **संयदिति।** यमेः क्विप्। मलोपे तुक्। **सुनदिति।** नमेः क्विपि मलोपे तुक्। **ऊ चेति।** गमादीनामुपधाया ऊभावश्चेति वक्तव्यमित्यर्थः। **लोपश्चेति।** चकारादनुनासिकलोपः समुच्चीयते इति भावः। **अग्रेगूरिति।** अग्रे गच्छतीति विग्रहो गमेरकारस्य ऊभावो मलोपश्च 'तत्पुरुषे कृति बहुलम्' इत्यलुक्। **अग्रेभ्रूरिति।** भ्रमेरकारस्य ऊभावः, मलोपश्च। **स्थः क च।** लुप्तविभक्तिकम्। स्थ इति पञ्चम्यन्तम्। **चात् क्विबिति।** उपसर्गे अनुपसर्गे च सुबन्ते उपपदे स्थाधातोः कप्रत्ययः स्यात्। क्विप् चेति फलितम्। **शंस्थ इति।** शमित्यव्ययं

---

कृन्निर्देशादिति दिक्। **सुग्वाविति।** 'ओः सुपि' इति यण्। **स्थः क च।** **शंस्था इति।** क्विपि लुप्ते 'घुमास्था-' इति ईत्वं न स्थानिवद्भावस्य। अनल्विधादिति निषेधात्। प्रत्ययलक्षणसूत्रं तु प्रत्ययस्यासाधारणरूपं यत्राश्रीयते तत्रैवेति नियमार्थमिति निष्कर्षात्। यत्तु कैयटेनोक्तम्—ईत्वमवकारादाविति वचनाद्भाष्यकारीयोदाहरणप्रामाण्याद्वा प्रत्ययलक्षणेन ईत्वं नेति। तद् अतृणेडित्यादिसिद्धये प्रत्ययप्राधान्ये अल्विध्यर्थं प्रत्ययलक्षणसूत्रमिति पक्षमभिप्रेत्य तत्राप्यवकारादाविति वचनस्वीकारे सुधीवेति न सिध्येदित्यपरितोषेण पक्षान्तरस्वीकार इति बोध्यम्। ननु नियमार्थमिति निष्कर्षपक्षे तु प्रागुक्तमित्रशीरित्यत्र कथमित्वं भवेदिति चेत्। अत्राहुः—शासः इदिति। ततः अङि नियमार्थमिदम्। अजादौ चेदित्वं स्यादङ्येव नान्यत्रेति हलग्रहणं मास्त्विति ज्ञेयमिति। न चैवमपि हलादौ पिति सार्वधातुके तृणह इमो विधानादतृणेडित्यादि तु नियमपक्षे न सिध्यतीत्यल्विध्यर्थमिति पक्षोऽपि स्वीकार्य इति वाच्यम्, 'उतो वृद्धिः-' इति सूत्राद्धल्ग्रहणमनुवर्त्य तृणहानीत्यत्रानिष्टवारणाय 'नाभ्यस्तस्याचि-' इति सूत्रादचि नेत्यनुवर्त्य व्याख्यानात्। एतच्च रुधादिगण एव व्याख्यातम्। स्यादेतत्—'सुपि स्थः' 'क्विप् च' इति सूत्राभ्यां कक्विपौ सिद्धौ तत्राह **शमीत्यादि।** धातुग्रहणसामर्थ्याद्धि धातुमात्राद्भवन्नच् प्रत्ययो हेत्वादिषु कृत्रष्टं यथा

इत्यचं बाधितुं सूत्रम् । २९८८ **सुप्यजातौ णिनिस्ताच्छील्ये** । (३-२-७८) अजात्यर्थे सुपि धातोर्णिनिः स्यात्ताच्छील्ये द्योत्ये । उष्णभोजी । शीतभोजी । अजातौ किम्-ब्राह्मणानामन्त्रयिता । ताच्छील्ये किम्-उष्णं भुङ्क्ते कदाचित् । इह वृत्तिकारेणोपसर्गभिन्न एव सुपि णिनिरिति व्याख्याय 'उत्प्रतिभ्या आङि सर्तेरुपसंख्यानम्' इति पठितम् । हरदत्तमाधवादिभिश्च तदेवानुसृतम् । एतच्च भाष्यविरोधादुपेक्ष्यम् । प्रसिद्धश्चोपसर्गेऽपि णिनिः 'स बभूवोपजीवि-

---

सुखे । तत्पूर्वात् स्थाधातोः कप्रत्यये आतो लोपः । **शंस्था इति** । क्विपि रूपम् । सुखं स्थापयतीत्यर्थः । तिष्ठतिरन्तर्भावितण्यर्थः । शंस्था इति भाष्यप्रयोगात् पृषोदरादित्वाच्च 'घुमास्था-' इति ईत्वं न । केचित्तु क चेति चकाराद् विजेवानुकृष्यते इत्याहुः । ननु 'सुपि स्थः' इति कप्रत्यये 'क्विप् च' इति क्विपि च सिद्धे किमर्थमिदमित्यत आह **शमिधातोरित्यचमिति** । अन्यथा धातुग्रहणसामर्थ्यात् कृञो हेत्वादिषु टप्रत्ययमिव शम्पूर्वात् स्थाधातोः कं क्विपं च अचप्रत्ययो बाधेतेति भावः । **सुप्यजातौ णिनिस्ताच्छील्ये** । 'सुपि स्थः' इत्यतः सुपीत्यनुवृत्तौ पुनः सुब्ग्रहणमुपसर्गेऽपि विधानार्थम् । अन्यथा 'आतोऽनुपसर्गे' इत्यतः अनुपसर्गे इत्यनुवर्तेत । तद् ध्वनयन्नुदाहरति **उष्णभोजीति** । उष्णभोजनशील इत्यर्थः । **उपसर्गभिन्न एवेति** । अनुपसर्गे इत्यनुवर्तते । सुब्ग्रहणं तु 'सत्सूद्विष-' इति सूत्राद् उपसर्गेऽपीत्यनुवृत्तिनिवृत्तये इति भावः । **उत्प्रतिभ्यामिति** । उत्प्रतिभ्यां परे आङि प्रयुज्यमाने सति तत्पूर्वात्सर्तेर्णिनेरुपसंख्यानमिति तदर्थः । उदासारिणी प्रत्यासारिणीत्युदाहरणम् । **भाष्याविरोधादिति** । सुब्ग्रहणमुपसर्गग्रहणानुवृत्तिनिवृत्त्य-

---

बाधते तथा तिष्ठतेः कक्विपावपि बाधेतेति 'स्थः क च' इत्यारम्भ इति भावः । नन्वेवं 'शमि धातोः-' इत्यस्यानन्तरं 'स्थः क च' इति सूत्र्यताम्, चकारेणाचि समुच्चिते सवर्णदीर्घेण शंस्था इति भविष्यति । एवं चोत्सर्गापवादयोः समानदेशतया संदर्भशुद्धिरपि लभ्यते, इत्वाभावार्थं च न यतनीयमिति महल्लाघवमिति चेत् । अत्राहुः—अशंस्था इत्यत्र 'अच्कावशक्तौ' इति सूत्रेणोत्तरपदमन्तोदात्तं स्यात् । 'कृद्ग्रहणे गतिकारकपूर्वस्यापि-' इति शंस्थाशब्दस्याजन्तत्वात् । क्विबन्तेन नञ्समासे तु नञ्पूर्वपदप्रकृतिस्वरः सिध्यतीति । **उष्णभोजीति** । उष्णं भोक्तुं शीलमस्य । **आमन्त्रयितेति** । मत्रि गुप्तपरिभाषणे चुरादिराङ्पूर्वः, इदित्त्वान्नुम्, ताच्छील्यस्य विवक्षितत्वात्तृन् । अत एव 'न लोका-' इति निषेधाद् ब्राह्मणानित्यत्र कर्मणि षष्ठी न कृता । **उपसर्गभिन्न एवेति** । 'सत्सूद्विष-' इति सूत्रे उपसर्गेऽपीत्युक्तत्वादुपसर्गभिन्नस्यैव सुपो लाभायास्मिन्सूत्रे पुनः सुब्ग्रहणं कृतमिति भावः । **भाष्यविरोधादिति** । उक्तं च

नाम्' 'अनुयायिवर्गः' 'पतत्यधो धाम विसारि' 'न वञ्चनीयाः प्रभवोऽनुजीविभिः' इत्यादौ। 'साधुकारिण्युपसंख्यानम्' ( वा २०३८ ) 'ब्रह्मणि वदः' ( वा २०३९ ) अताच्छील्यार्थं वार्तिकद्वयम्। साधुदायी। ब्रह्मवादी। २९८९ **कर्तर्युपमाने।** ( ३-२-७९ ) णिनिः स्यात्। उपपदार्थः कर्ता प्रत्ययार्थस्य कर्तुरुपमानम्। उष्ट्र इव क्रोशति उष्ट्रक्रोशी। ध्वाङ्क्षरावी। अताच्छील्यार्थ-

र्थम्, उपसर्गे अनुपसर्गे च सुबन्ते उपपदे धातोर्णिनिरित्येव भाष्ये उदाहृतत्वादिति भावः। तथा च 'उत्प्रतिभ्यामाङि सर्तेः' इति वचनं नादर्तव्यम्। भाष्ये तत्पाठस्तु प्रक्षिप्त एवेति भावः। अत एव 'अनुगादिनः'[1] इति सूत्रप्रयोगश्च संगच्छते इति ज्ञेयम्। उपसर्गभिन्न एव सुपि णिनिरिति मतं शिष्टप्रयोगविरुद्धं चेत्याह **प्रसिद्धश्चोपसर्गेऽपि णिनिरिति।** इत्यादावित्यत्रान्वयः। **साधुकारिणीति।** कृञ्ग्रहणं सर्वधातूपलक्षणम्। साधुकारीत्यादिशब्दविषये तत्सिद्ध्यर्थं णिनेरुपसंख्यानमित्यर्थः। साधुशब्दे उपपदे धातोर्णिनिरिति यावत्, भाष्ये साधुकारी साधुदायीत्युदाहरणात्। **ब्रह्मणि वद इति।** णिनेरुपसंख्यानमिति शेषः। ननु 'सुप्यजातौ-' इत्येव सिद्धे किमर्थमिदं वार्तिकमित्यत आह **अताच्छील्यार्थमिति।** **साधुदायीति।** आतो युक्। **ब्रह्मवादीति।** ब्रह्म वेदः। **कर्तर्युपमाने।** **कर्तुरुपमानमिति।** चेदित्यध्याहार्यम्। ननु 'सुप्यजातौ-'

भाष्ये—सुबिति वर्तमाने पुनः सुब्ग्रहणं किमर्थमनुपसर्ग इत्येवं तदभूद् इदं तु सुब्मात्रे यथा स्यादुदासारिण्यः प्रत्यासारिण्य इति। अस्यायमाशयः—'सत्सूद्विष-' इति सूत्रे 'सुपि स्थः' इत्यतः सुपीत्यनुवर्तते, तच्च उपसर्गेतरपरम्, उपसर्गेऽपीति पृथगुक्तेः। तदिहानुवर्तमानमर्थाधिकारादुपसर्गेतरपरमेव स्यादिति निष्कर्षे तु मा भूदिह सुब्ग्रहणम्। उपसर्गेऽपीत्यंशस्याप्यनुवृत्त्या निर्वाहात्। सर्वथापि सुब्मात्रे उपपदे णिनिः न त्वनुपसर्ग एवेति सिद्धान्तः। एतच्च शब्दकौस्तुभे स्पष्टम्। **प्रसिद्धश्चेति।** एवं च पाणिनीयानुसारिणीमिति प्रक्रियाकारप्रयोगोऽपि निर्बाध एव। अमरश्च प्रायुङ्क्त—'लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः' इति दिक्। **साधुकारिणीति।** एतच्च ज्ञापकसिद्धम्। 'आ क्वेः-' इति सूत्रे हि तच्छीलात्पृथक् साधुकारी गृह्यते तच्च ताच्छील्यं विनापि णिनौ सत्येव संगच्छते। **ब्रह्मणि वद इति।** इदं तु वाचनिकमेव। **अताच्छील्यार्थमिति।** एतच्च कैयटहरदत्तादिग्रन्थे स्पष्टम्। यत्तु भट्टवार्तिके ब्रह्मवादिशब्दस्य तच्छीलतद्धर्मतत्साधुकारिपरतया व्याख्यानं कृतम्। आ क्वेरित्यधिकारे तु ब्रह्मणि वदेर्णिनिविधायकं वचनं नास्त्येवेति कथमिदं संगच्छेतेति चेत्। अत्राहुः—भट्टपादानामयमाशयः 'सुप्यजातौ-' इति सूत्रेण

1 'अनुगादिनष्ठक्' इति क्वचित् पाठः।

जात्यर्थं च सूत्रम्। कर्तरि किम्-अपूपानिव भक्षयति माषान् । उपमाने किम्-उष्ट्रः क्रोशति । २९९० व्रते । ( ३-२-८० ) णिनिः स्यात् । स्थण्डिले[1] शायी । २९९१ बहुलमाभीक्ष्ण्ये । ( ३-२-८१ ) पौनःपुन्ये द्योत्ये सुप्युपपदे णिनिः । क्षीरपायिण उशीनराः । २९९२ मनः । ( ३-२-८२ ) सुपि मन्यतेर्णिनिः स्यात् । दर्शनीयमानी । २९९३ आत्ममाने खश्च । ( ३-२-८३ ) स्वकर्मके मनने वर्तमानान्मन्यतेः सुपि खश् स्यात् । चाण्णिनिः । पण्डितमात्मानं मन्यते पण्डितम्मन्यः, पण्डितमानी । 'खित्यनव्ययस्य' ( सू

इति सिद्धे किमर्थमिदमित्यत आह **अताच्छील्यार्थमिति । व्रते । णिनिः स्यादिति ।** सुप्युपपदे णिनिः स्याद् व्रते गम्ये इति यावत् । **स्थण्डिले शायीति ।** 'तत्पुरुषे कृति बहुलम्' इत्यलुक् **बहुलमाभीक्ष्ण्ये ।** जातावप्युपपदे प्राप्त्यर्थमिदम् । तद् ध्वनयन्नुदाहरति **क्षीरपायिण इति । मनः ।** दैवादिकस्यैव मनेर्ग्रहणं न तु तानादिकस्य, बहुलग्रहणानुवृत्तेः, तदाह **सुपि मन्यतेरिति ।** मनुतेर्ग्रहणे तु बाधकमुत्तरसूत्रे वक्ष्यते । **आत्ममाने खश्च ।** आत्मनः स्वस्य मानो मननम् आत्ममानः, तदाह **स्वकर्मके मनने इति । पण्डितम्मन्य इति ।** खशः शित्त्वेन सार्वधातुकत्वात् श्यन् । खित्त्वाद् 'अरुर्द्विषत्-' इति मुम् । तानादिकस्य मनेर्ग्रहणे तु उविकरणः स्यात् । कालीमात्मानं मन्यते इत्यर्थे खशि

ताच्छील्ये णिनिः । उपसंख्यानेन ज्ञापकेन वा साधुकारिणि णिनिः । 'आवश्यकाधमर्ण्ययोर्णिनिः' इत्यावश्यके णिनिस्तु तद्धर्मे पर्यवस्यति न त्विह 'आ क्वेः-' इति सूत्रस्य व्यापारोऽस्तीति । ननु ब्रह्मवादिनो वदन्ति इत्यत्र ब्रह्म वेद इति ब्रह्मशब्दस्यापि जातिवाचकत्वात्कथमिह ताच्छील्ये णिनिरिति समर्थनमिति चेत् । अत्र नव्याः—'सुप्यजातौ-' इत्यत्र प्राणिजातिरेव पर्युदस्यते ताच्छील्यसम्भिव्याहारात् । ब्राह्मणानामन्त्रयितेति प्रत्युदाहरणानुगुण्याच्चेति न काप्यनुपपत्तिरिति । **मनः ।** बहुलग्रहणानुवृत्तेरिह मन ज्ञान इति दैवादिकस्यैव ग्रहणं न तु मनु अवबोधन इति तानादिकस्य । तेन उत्तरसूत्रे खशि श्यन्नेव भवति नतूप्रत्ययस्तदाह **मन्यतेरिति । आत्ममाने ।** मननं मानः, भावे घञ्, आत्मनो मान इति कर्मणि षष्ठ्या समासः । स्वपर्याय आत्मशब्दः प्रत्ययार्थत्वेन सन्निहितकर्ता स्वपदार्थस्तदाह **स्वकर्मक इत्यादि । चादिति ।** ननु वासरूपविधिना लभ्यत एव णिनिरिति किमर्थश्चकार इति चेत् । अत्राहुः—चकारेणाविच्छेदाय णिनिः समुच्चीयते । तेन 'करणे यजः' इत्यादौ णिनिरेवानुवर्तते, न तु खश्, एवं चोक्तप्रयोजनानुरोधेन चानुकृष्टं नोत्तरत्रेतीह न प्रवर्तते इति । **पण्डितमात्मानमिति ।** एकस्याप्यात्मनः स्वरूपेण कर्तृत्वं

१ 'स्थण्डिलशायी' इत्यन्यत्र पाठः ।

२१४३ )। कालिमन्या। अनव्ययस्य किम्-दिवामन्या। २१६४ **इच एकाचोऽम्प्रत्ययवच्च**। ( ६-३-६८ ) इजन्तादेकाचोऽम्स्यात्स च स्वाद्यम्वत् खिदन्ते परे। 'औतोऽम्शसोः' ( सू २८६ )। गाम्मन्यः। 'वाऽम्शसोः' ( सू ३०२ )। स्त्रियम्मन्यः, स्त्रीम्मन्यः। नॄ, नरम्मन्यः। भुवम्मन्यः। श्रिय-

---

श्यनि कृते आह **खित्यनव्ययस्येति**। 'स्त्रियाः पुंवत्-' इति पुंवत्त्वं बाधित्वा परत्वाद् ध्रस्व इत्यर्थः। **दिवामन्येति**। अधिकरणशक्तिप्रधानस्यापि दिवाशब्दस्य वृत्तिविषये कर्मत्वं बोध्यम्। **इच एकाचः**। एकाचः अमिति छेदः। अम् च अम् चेत्येकशेषः। एकं विधेयसमर्पकम्। इच एकाचोऽमिति प्रथमं वाक्यम्। इच इत्येकाच इति च पञ्चमी। 'अलुगुत्तरपदे' इत्युत्तरपदाधिकाराद् आक्षिप्तं पूर्वपदम् इचा विशेष्यते। तदन्तविधिः, तदाह **इजन्तादेकाचोऽम् स्यादिति**। मुमोऽपवादः। द्वितीयम् अम्पदं प्रत्ययवदित्येकदेशेन प्रत्ययेन समानाधिकरणं संबध्यते। असामर्थ्येऽपि वतिप्रत्यय आर्षः। अम्प्रत्ययवदिति द्वितीयं वाक्यं संपद्यते। स्वादिप्रत्ययेषु यद् द्वितीयैकवचनं तदेवात्र अमिति[1] विवक्ष्यते, व्याख्यानात्, तदाह **स च स्वाद्यम्वदिति**। एतत्सर्वं भाष्ये स्पष्टम्। **खिदन्ते पर इति**। खिदन्ते उत्तरपदे परत इत्यर्थः। 'खित्यनव्ययस्य' इत्यतः खितीत्यनुवर्तते इति भावः। अम्प्रत्ययवदित्यतिदेशस्य प्रयोजनमाह **औतोम्शसोरिति**। **गाम्मन्य इति**। गामात्मानं मन्यते इत्यर्थे मनेः खशि श्यन्, सुपो लुक्, गोशब्दादम्, अम्प्रत्ययवदित्यतिदेशाद् मकारस्य 'न विभक्तौ-' इति नेत्त्वम्। 'औतोऽम्शसोः' इत्योकारस्य आकार इति भावः। अम्प्रत्ययवदित्यस्य प्रयोजनान्तरमाह **वाऽम्शसोरिति**। **स्त्रियम्मन्य इति**। स्त्रियमात्मानं मन्यते इत्यर्थे मने खशि श्यन्। सुपो लुक्। स्त्रीशब्दाद् 'वाऽम्शसोः' इति इयङ्विकल्पः। अत्र यकारादकारश्रवणार्थम् अम्-

---

परिण्डतत्वविशिष्टरूपेण च कर्मत्वं बोध्यम्। आत्ममाने किम्, दर्शनीयमानी देवदत्तो यज्ञदत्तस्य। **कालिमन्येति**। 'स्त्रियाः पुंवत्-' इति प्राप्तं पुंवद्भावं बाधित्वा परत्वाद् ह्रस्वः। यत्त्वत्र 'क्यङ्मानिनोः-' इति प्राप्तः पुंवद्भाव इति प्रसादकृतोक्तं तद्भ्रमसोक्तमेव, मानिन्रूपाभावस्य स्पष्टत्वात्। **दिवामन्येति**। अधिकरणशक्तिप्रधानस्याप्यस्य वृत्तिस्वभावात्कर्मत्वम्। **इच एकाचः**। अम्ग्रहणमिहावर्तते, तत एकेन अम् विधीयते परेण प्रत्ययो विशेष्यते तदाह **स्वाद्यम्वदिति**। एवं च 'न विभक्तौ तुस्माः' इति निषेधान्मकारस्य नेत्संज्ञा, अत एव परश्च भवति। 'औतोऽम्शसोः' इत्यत्र शसा साहचर्यात् सुबेवाम् गृह्यत इत्युक्तत्वादोत आकारश्च भवतीत्याशयेनोदाहरति **गांमन्य इति**। **नरंमन्य इति**। 'ऋतोऽङि-' इत्यादिना गुणः।

[1] 'अमिति' इति क्वचिन्नास्ति।

**मात्मानं मन्यते श्रिमन्यं कुलम्। भाष्यकारवचनाच्छ्रीशब्दस्य ह्रस्वो मुममोर-**

---

विधिः। मुमि तु अकारो न श्रूयेत। **स्त्रीम्मन्य इति**। इयङभावपक्षे 'अमि पूर्वः'। अम्प्रत्ययवदित्यस्य प्रयोजनान्तरमाह **नृ, नरम्मन्य इति**। नृ इत्यविभक्तिकम् उदाहरणे नृशब्दस्य समावेशसूचनार्थम्। नरमात्मानं मन्यते इत्यर्थे **मनेः** खश, श्यन्, सुपो लुक्, नृशब्दादम् अम्प्रत्ययवदित्यतिदेशाद् 'ऋतोऽङि–' इति गुणः। अत्रापि रेफादकारश्रवणार्थः अम्विधिः। मुमि त्वकारो न श्रूयेत। अम्प्रत्ययवदित्यस्य प्रयोजनान्तरमाह **भुवम्मन्य इति**। भुवमात्मानं मन्यते इत्यर्थे मनेः खश्, श्यन्, सुपो लुक्। भूशब्दादम्, अम्प्रत्ययवदित्यतिदेशाद् 'अचि श्नुधातु–' इत्युवङ्। अतिदेशाभावे तु उवङ् न स्यात्, तस्याजादिप्रत्यये विधानात्। **श्रिमन्यमिति**। मनेः खश् श्यन्। अत्र मननक्रियां प्रति कुलत्वेन रूपेण कुलं कर्तृ, तस्यैव कुलस्य अध्यारोपितश्रीत्वेन रूपेण कर्मत्वं चेति स्थितिः। एवं च श्रीशब्दस्य नित्यस्त्रीलिङ्गस्यापि कुले लक्षणया वृत्तेर्नपुंसकत्वम्। यत्र हि प्रातिपदिकस्यैव लक्षणा प्रसिद्धा तत्र पूर्वलिङ्गत्यागः। यथा प्रकृते श्रीशब्दः। यत्र तु पदस्य लक्षणा, न तत्र पूर्वलिङ्गत्यागः, यथा गङ्गायां घोष इत्यादौ इति 'पुंयोगादाख्यायाम्' इति सूत्रे प्रकृतसूत्रे च भाष्यकैयटयोर्मर्यादा स्थिता। एवं च कालिम्मन्यं कुलमित्यत्र कालीशब्दस्य न स्त्रीलिङ्गपरित्यागः, प्रयोगानुसारेण तत्र पदलक्षणाया एवाभ्युपगमात् श्रिमन्यं कुलमित्यत्र तु प्रयोगानुसारात् श्रीशब्दस्य प्रातिपदिकस्यैव लक्षणेति पूर्वलिङ्गपरित्यागाद् नपुंसकलिङ्गत्वमेवाश्रीयते। ततश्च श्रीशब्दस्यात्र नपुंसकत्वात् 'खित्यनव्ययस्य' इति बहिरङ्गं बाधित्वा 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्व एव न्याय्यः। मुमपवादे 'इच एकाचः–' इति अमि कृते तस्य 'स्वमोर्नपुंसकात्' इति लुक्। तथा च श्रिमन्यं कुलमिति सिद्धम्। न च गाम्मन्य इत्यादावपि 'सुपो धातुप्रातिपदिकयोः' इति लुक् स्यादिति वाच्यम्, 'इच एकाचः–' इत्यमः 'सुपो धातु–' इति लुगपवादत्वात्। 'स्वमोर्नपुंसकात्' इति लुकस्तु नायमम्विधिर्बाधकः, मध्येऽपवादन्यायाद् इति प्रकृतसूत्रे भाष्यकैयटयोः स्पष्टम्, तदाह **भाष्यकारवचनाच्छ्रीशब्दस्य ह्रस्व**

---

**भाष्यकारेति**। अयं भावः—यथा पृष्ठादयः शब्दाः पुंयोगात्स्त्रियां वर्तन्ते पृष्ठी गणिकेति तथेह श्रीशब्दः परित्यक्तस्वलिङ्गः क्लीबः सन् कुले वर्तते, तत्र 'ह्रस्वो नपुंसके–' इति ह्रस्वः, मुम् तु न। अपवादेन अमा बाधात्। 'स्वमोर्नपुंसकात्' इत्यमो लुक्। न चैवं गांमन्य इत्यादावपि 'सुपो धातुप्रातिपदिकयोः' इति लुक् स्यादिति वाच्यम्, अम्विधिसामर्थ्यादेव तद्बाधादित्याहुः। अम्प्रत्ययस्तु 'मध्येऽपवादा–' इति न्यायेन 'सुपो धातुप्रातिपदिकयो.' इति लुकमेव बाधते, न तु 'स्वमोर्नपुंसकात्' इति

भावश्च ॥ २९९५ भूते। ( ३-२-८४ ) अधिकारोऽयम्। 'वर्तमाने लट्' ( सू २१५१ ) इति यावत्। २९९६ करणे यजः। ( ३-२-८५ ) करणे उपपदे भूतार्थाद्यजेर्णिनिः स्यात्कर्तरि। सोमेनेष्टवान् सोमयाजी। अग्निष्टोमयाजी। २९९७ कर्मणि हनः। ( ३-२-८६ ) पितृव्यघाती। कर्मणीत्येतत् 'सहे च' ( सू ३००६ ) इति यावदधिक्रियते। २९९८ ब्रह्मभ्रूणवृत्रेषु क्विप्। ( ३-२-८७ ) एषु कर्मसूपपदेषु हन्तेर्भूते क्विप् स्यात्। ब्रह्महा। भ्रूणहा। वृत्रहा। 'क्विप् च' ( सू २९८३ ) इत्येव सिद्धे नियमार्थमिदम्। ब्रह्मादिष्वेव, हन्तेरेव, भूत एव, क्विबेवेति चतुर्विधोऽत्र नियम इति काशिका। ब्रह्मादिष्वेव

---

इति। 'ह्रस्वो नपुंसके-' इत्यनेनेति शेषः। **मुममोरभावश्चेति**। मुमपवादस्य अमः 'स्वमोर्नपुंसकात्' इति लुकि सति तयोः प्रयोगाभावः फलतीत्यर्थः। **भूते। अधिकारोऽयमिति**। धातोरित्यधिकृतम्। ततश्च भूतार्थवृत्तेर्धातोरित्युत्तरत्रानुवर्तते इति फलति। **वर्तमाने इति**। 'वर्तमाने लट्' इत्यतः प्रागित्यर्थः। अत्र व्याख्यानमेव शरणम्। **करणे यजः। सोमेनेति**। सोमाख्यलताविशेषरसेन यागं कृतवानित्यर्थः। सोमलतारसद्रव्यकेन यागेन अपूर्वमुत्पादितवानिति मीमांसकाः। एतच्च द्वितीयस्य द्वितीये 'द्रव्यसंयोगाच्चोदना पशुसोमयोः' इत्यधिकरणे अध्वरमीमांसाकुतूहलवृत्तौ प्रपञ्चितमस्माभिः। **अग्निष्टोमयाजीति**। अग्निष्टोमाख्ययागेन अपूर्वं भावितवानित्यर्थः। **कर्मणि हनः**। कर्मण्युपपदे भूतार्थाद् हनेर्णिनिः स्यात्। **पितृव्यघातीति**। पितृव्यं हतवानित्यर्थः। 'हनस्तः' इति तः, 'हो हन्तेः-' इति हस्य घः। **ब्रह्मभ्रूणवृत्रेषु क्विप्**। पूर्वसूत्रात्कर्मग्रहणानु-

---

लुकमिति भाष्यादौ स्थितम्। स्यादेतत्—नपुंसकह्रस्वे कृते मुमः प्राप्तिरेव नास्ति, कथमत्रापवादेन अमा बाधादित्युक्तिः संगच्छेत, 'अरुर्द्विषत्-' इति सूत्रे हि अन्तग्रहणस्य समीपवाचित्वेन 'खिल्यनव्ययस्य' इति ह्रस्वे कृते पश्चान्मुमिति व्याख्यातत्वात्। सत्यम्। जनमेजय इत्यत्र स्वतःसिद्धेऽपि ह्रस्वे यथा 'खिल्यनव्ययस्य' इति पुनर्ह्रस्वो मुमर्थं स्वीक्रियते तथात्रापि भवेदित्यस्त्येव मुमः प्राप्तिरिति। **भूते**। धातोरित्यधिकाराद्धात्वर्थस्य विशेषणमिदम्। भूतेऽर्थे विद्यमानाद्धातोरित्यर्थः। **करणे**। स्वरितत्वाण्णिनिरेवानुवर्तते न तु खश् इत्याह **णिनिः स्यादिति**। सोमेन लताविशेषेण यागं कृतवानित्यर्थः। **अग्निष्टोमेति**। अग्निष्टोमस्तोत्रेण समाप्यमानो यो यागः स लक्षणयाऽग्निष्टोमस्तेनापूर्वं भावितवानित्यर्थः। उक्तं च काशिकायाम् 'अग्निष्टोमः फलभावनायां करणम्' इति। **कर्मणि हनः। पितृव्यघातीति**। अत्र काशिका—'कुत्सितग्रहणं कर्तव्यमिह माभूत् चोरं हतवान्' इति। यद्यपीदं भाष्ये

क्विबेवेति द्विविधो नियम इति भाष्यम् । २९९९ सुकर्मपापमन्त्रपुण्येषु

वृत्तेराह **कर्मस्विति । हन्तेर्भूते इति ।** भूतार्थवृत्तेर्हन्तेरित्यर्थः । **चतुर्विध इति ।** पुनर्विधानलब्धस्य एवकारस्य विनिगमनाविरहाच्चतुर्ष्वपि निवेश इति भावः । तत्र ब्रह्मादिष्वेव हन्तेरिति नियमात् पुरुषं हतवानित्यत्र न क्विप् । ब्रह्मादिषु हन्तेरेवेति नियमाद् ब्रह्म अधीतवानित्यत्र न क्विप् । ब्रह्मादिषु हन्तेर्भूतकाले एवेति नियमाद् ब्रह्म हन्ति हनिष्यति वेत्यत्र न क्विप् । क्विबेवेति नियमाद् ब्रह्म हतवानित्यत्र अण् न भवति, किंतु 'ब्रह्मभ्रूण-' इति क्विबेव । निष्ठा तु भवत्येव, सोपपदप्रत्ययस्यैव नियमेन व्यावृत्तेः । **द्विविध इति ।** उभयतो नियमोऽयम्-ब्रह्मादिष्वेव

---

नास्ति तथापि शब्दशक्तिस्वाभाव्यादिदं लभ्यत इत्याहुः । **चतुर्विध इति ।** अयमाशयः—इह सूत्रे श्रुतत्वात्पूर्वं ब्रह्मादय उद्देश्यास्ततोऽनन्तरं प्रकृतित्वाद्धन्तिस्ततः परिशेषाद् भूत इति । क्विप् तु सर्वान्ते निर्देष्टव्यः, विधेयत्वात् । तदेवं वचनव्यक्तिः, ब्रह्मादिषूपपदेषु हन्तेर्भूते क्विबिति । एवं स्थिते यत्रैवकारस्ततोऽन्यत्र नियम इति न्यायेन नियमोऽत्र भवन्ननन्तरे भवति । ततश्च ब्रह्मादिष्वेवेत्यवधारणे हन्तेस्तदनन्तरं निर्दिष्टत्वादुपपदान्तरसंबन्धनिवृत्तिफलो नियमो भवति । ब्रह्मादिषु हन्तेरेव भूते इत्यवधारणे त्वनन्तरत्वाद्विशेषेऽपि प्राथम्यादुपपदनियमो धात्वन्तरनिवृत्तिफलकः, ब्रह्मादिषु हन्तेर्भूते एव क्विबित्यवधारणे तु क्विब्हन्त्योरानन्तर्येऽविशिष्टेऽपि प्राधान्यात्कालान्तरसंबन्धकवृत्तिफलकः प्रत्ययनियमः । ब्रह्मादिषु हन्तेर्भूते क्विबेवेति वचनव्यक्तौ प्रत्ययान्तरसंबन्धनिवृत्तिफलकः कालनियमः । सोऽयं प्रकृत्युपपदप्रत्ययकालनियमानां विवेकः । अगृह्यमाणविशेषात्तु चतुर्विधस्यापीह ग्रहणम् । तत्र-ब्रह्मादिष्वेव हन्तेरिति प्रकृतिनियमे भूत इत्याश्रयणाद्वर्तमानकाले भविष्यत्काले चोपपदान्तरेऽपि भवत्येव । पुरुषं हन्ति हनिष्यति वा पुरुषहा । 'अरिहयोरिहयोगविचक्षणः' । अरीन् हन्तीति अरिहा स चासौ योगश्च अरिहयोगस्तत्र विचक्षण इत्यर्थः । प्रकृतिनियमफलं तु पुरुषं हतवान् पुरुषहा इति भूतार्थे प्रयोगाभावः । ब्रह्मादिषु हन्तेरेवेत्युपपदनियमेऽपि भूत इत्याश्रयणाद्वर्तमानभविष्यत्कालयोर्धात्वन्तरादपि भवत्येव । वृत्रं जयति जेष्यति वा वृत्रजिदिति । उपपदनियमफलं तु वृत्रं जितवान् वृत्रजिदिति प्रयोगाभावः । भूत एव क्विबिति प्रत्ययनियमेऽपि ब्रह्मादिष्वित्युक्तेरुपपदान्तरे वर्तमानभविष्यत्कालयोर्हन्तेः क्विब् भवत्येव । पुरुषं हन्ति हनिष्यति वा पुरुषहा अरिहेति प्राग्वत् । प्रत्ययनियमफलं तु ब्रह्माणं हन्ति ब्रह्महेत्यादिप्रयोगाभावः । भूते क्विबेवेति कालनियमेऽपि ब्रह्मादिष्वित्युक्तेरुपपदान्तरे भूतेऽपि प्रत्ययान्तरं भवत्येव, पितृव्यं हतवान् पितृव्यघाती । इह 'कर्मणि हनः' इति भूते णिनिः ।

कृञः। (३-२-८९) सौ कर्मादिषु च कृञः क्विप्स्यात्। त्रिविधोऽत्र नियम इति काशिका। सुकृत्। कर्मकृत्। पापकृत्। मन्त्रकृत्। पुण्यकृत्। क्विबेवेति नियमात्कर्म कृतवानित्यत्राण् न। कृञ एवेति नियमान्मन्त्रमधीतवान् मन्त्राध्यायः, अत्र न क्विप्। भूत एवेति नियमान्मन्त्रं करोति करिष्यति वेति विवक्षायां न क्विप्। स्वादिष्वेवेति नियमाभावादन्यस्मिन्नप्युपपदे क्विप्, शास्त्रकृत्। भाष्यकृत्।
३००० सोमे सुञः। (३-२-९०) सोमसुत्। चतुर्विधोऽत्र नियम इति

क्विबेवेति च भाष्यमित्यर्थः। एवं च हन्तेरेव भूत एवेति नियमद्वयमुपेक्ष्यमिति भावः। **सुकर्म**। सु, कर्म, पाप, मन्त्र, पुण्य एषां पञ्चानां द्वन्द्वः। **त्रिविध इति**। सुकर्मादिषु भूते कृञः क्विबेवेति, सुकर्मादिषु भूते कृञ एव क्विबिति, सुकर्मादिषु भूत एव कृञ इति त्रिविध इत्यर्थः। **अण् नेति**। क्तवतुस्तु भवत्येव, सोपपद-प्रत्ययस्यैव नियमेन व्यावृत्तेरिति भावः। **स्वादिष्वेवेति**। सुकर्मादिषु पञ्चस्वि-त्यर्थः। **सोमे सुञः**। सोमे कर्मण्युपपदे भूते सुनोतेः क्विबित्यर्थः। **चतुर्विध**

कालनियमफलं तु ब्रह्माणं हतवान् ब्रह्मघातीति प्रयोगाभावः। सोपपदश्च प्रत्ययो नियमेन व्यावर्त्यते, निष्ठा तु भवत्येव वृत्रं हतवानिति। भाष्यकारस्तु प्रकृतिकालनिय-मावेवाशिश्रियत्। तस्यायमाशयः—धातुकालौ हि नेह सूत्रे श्रुतौ किं तु प्रकरण-लक्षणाजघन्यप्रमाणेनोपस्थितौ। अतस्तयोरेवोपरोधो न्याय्यो न तूपपदप्रत्यययोः, श्रुत्युपस्थापितत्वात्। एवं न्यायोपष्टब्धेन भाष्येण सह विरोधाद् वृत्तिमतमुपेक्ष्यमेवेति कैयटे स्थितम्। यत्त्विह हरदत्तेनोक्तं धातूपपदविषयं नियमद्वयं भाष्ये प्रदर्शितमिति, तत्र धातुकालविषयमिति वक्तव्ये उपपदग्रहणं प्रामादिकमित्यवधेयम्। **सुकर्म**। **त्रिविध इति**। धातुनियमस्त्विह नेष्यत इति भावः। **क्विबेवेतीति**। भूते क्विबेवेति प्रत्ययान्तरसंबन्धनिवृत्तिफलककालनियमादित्यर्थः। **कृञ एवेतीति**। सुकर्मादिषु कृञ एवेति धात्वन्तरसंबन्धनिवृत्तिफलकोपपदनियमादित्यर्थः। **भूत एवेतीति**। भूत एव क्विबिति कालान्तरसंबन्धनिवृत्तिफलकप्रत्ययनियमादित्यर्थः। **स्वादिष्वेवेतीति**। स्वादिष्वेव कृञ इत्युपपदान्तरसंबन्धनिवृत्तिफलकधातुनियमाभा-वादित्यर्थः। **सोमे सुञः**। इहापि चतुर्विधो नियम इति वृत्तिः। एवमुत्तरसूत्रेऽपि। तत्र भूतकालस्य क्विपि नियतत्वात्सोमं सुतवान् सोमसावः, अग्निं चितवान् अग्निचाय इत्यण् न भवति। सुनोतेः सोम इव उपपदे नियतत्वाच्चिनोतेस्त्वग्नावेवोपपदे निय-तत्वात्। सुरां सुतवान् सुरासुत् इष्टकाश्चितवानिष्टकाचिदिति न भवति, किं तु सुरा-साव इष्टकाचाय इत्यणेव भवति, सोमस्य सुनोतावेव धातोर्नियतत्वात्। अग्नेस्तु चिनोतावेव नियतत्वात्। सोमं क्रीतवान् सोमक्रीः, अग्निं भृतवान् अग्निभृद् इति

काशिका। एवमुत्तरसूत्रेऽपि। ३००१ अग्नौ चेः। (३-२-९१) अग्निचित्। ३००२ कर्मण्यग्न्याख्यायाम्। (३-२-९२) कर्मण्युपपदे कर्मण्येव कारके चिनोतेः क्विप् स्याद् अग्न्याधारस्थलविशेषस्याख्यायाम्। श्येन इव चितः श्येनचित्। ३००३ कर्मणीनि विक्रियः। (३-२-९३) कर्मण्युपपदे विपूर्वात्क्रीणातेरिनिः स्यात्। 'कुत्सितग्रहणं कर्तव्यम्' (वा २०४७)। सोमविक्रयी। घृतविक्रयी। ३००४ दृशेः क्वनिप्। (३-२-९४) कर्मणि भूत इत्येव। पारं दृष्टवान् पारदृश्वा। ३००५ राजनि युधि कृञः। (३-२-९५)

---

इति। पूर्ववद् व्याख्येयम्। एवमिति। 'अग्नौ चेः' इत्युत्तरसूत्रेऽपि चतुर्विधो नियम इत्यर्थः। अग्नौ चेः। अग्नौ कर्मण्युपपदे भूतार्थवृत्तेश्चिनोतेः क्विप् स्यादित्यर्थः। अग्निचिदिति। अग्न्याख्यं स्थण्डिलविशेषमिष्टकाभिश्चितवानित्यर्थः। कर्मण्यग्न्याख्यायाम्। कर्मणीत्यनुवृत्तमुपपदसमर्पकम्। अत्रत्यं तु कर्मणीत्येतत्प्रत्ययार्थसमर्पकम्। तथा चात्र कर्तरीति न संबध्यते, तदाह कर्मण्युपपदे इत्यादि। चिनोतेरिति। भूतार्थादित्यपि बोध्यम्। श्येन इवेति। श्येनशब्दः श्येनसदृशे लाक्षणिक इति भावः। श्येनाकृतिक इति यावत्। कर्मणीनि विक्रियः। इनि इत्यविभक्तिकम्। विपूर्वस्य क्रीञ्धातोर्विक्रिय इति पञ्चम्यन्तम्। कुत्सितेति। कुत्सिते कर्मण्युपपदे उक्तविधिर्भवतीत्यर्थः। सोमविक्रयीति। सोमद्रव्यं च विक्रीयमाणं विक्रेतुः कुत्सामावहति, तद्विक्रयस्य निषिद्धत्वादिति भावः। दृशेः क्वनिप्। 'आतो मनिन्क्वनिब्वनिपश्च, अन्येभ्योऽपि दृश्यन्ते' इत्येव क्वनिपि सिद्धे तत्सहचरितमनिनादिव्यावृत्त्यर्थमिदम्, सोपपदाण्णादिबाधनार्थं च। निष्ठा तु भवत्येव, सोपपदप्रत्ययस्यैवात्र पुनः क्विब्ग्रहणेन निवृत्तेः। पारं दृष्टवान्।

---

क्विब् न भवति किं तु सोमक्रायः अग्निभार इत्यणेव भवति। भूत एव क्विपो नियतत्वात्सोमं सुनोति सोष्यति वेत्यर्थे क्विब् न भवति। तथा अग्निं चिनोति चेष्यति वेत्यर्थे क्विबभावः, किंत्वणेव। कर्मण्यग्न्याख्यायाम्। श्येनचिदिति। समुदायोऽयम् आहवनीयधारणार्थे इष्टकानिर्मितस्थलविशेषे निरूढः। कर्मणीति। कुत्सितग्रहणमिति। एतच्च वार्तिकं पुनः कर्मग्रहणसामर्थ्याल्लभ्यते, क्रियया संबध्यमानं कर्तृकुत्सामावहति तत्रेत्यर्थः। सोमादयश्च विक्रीयमाणाः प्रतिषेधात्कुत्सावहाः। कुत्सितग्रहणान्नेह धान्यविक्रायः। दृशेः क्वनिप्। 'अन्येभ्योऽपि दृश्यन्ते' इति सिद्धे नियमार्थमिदं क्वनिबेव यथा स्यात्तत्सहनिर्दिष्टौ मनिन्वनिपौ माभूतां न वा अणादय इति। सोपपदप्रत्ययस्यैव नियमेन निवर्तनान्निष्ठा तु भवत्येव। पारं दृष्टवानिति। एवं स्थिते 'विश्वदृश्वनयना वयमेव' इत्यादौ किं

क्वनिप् स्यात्। युधिरन्तर्भावितण्यर्थः। राजानं योधितवान् राजयुध्वा। राजकृत्वा। ३००६ सहे च। (३-२-९६) कर्मणीति निवृत्तम्। सहयुध्वा। सहकृत्वा। ३००७ सप्तम्यां जनेर्डः। (३-२-९७) सरसिजम्। मन्दुरायां जातो मन्दुरजः। 'ङ्यापोः-' (सू १००१) इति ह्रस्वः। ३००८ पञ्चम्यामजातौ। (३-२-९८) जातिशब्दवर्जिते पञ्चम्यन्ते उपपदे जनेर्डः स्यात्। संस्कारजः। अदृष्टजः। ३००९ उपसर्गे च संज्ञायाम्। (३-२-९९) 'प्रजा स्यात्सन्ततौ जने'। ३०१० अनौ कर्मणि। (३-२-१००) अनुपूर्वाज्जनेः कर्मण्युपपदे डः स्यात्। पुमांसमनुरुध्य जाता पुमनुजा। ३०११ अन्येष्वपि दृश्यते। (३-२-१०१) अन्येष्वप्युपपदेषु जनेर्डः स्यात्। अजः। द्विजो

---

राजनि युधि कृञः। युधि, कृञ् अनयोः समाहारद्वन्द्वात्पञ्चमी। क्वनिप् स्यादिति। राजनि कर्मण्युपपदे भूतार्थाद्युधेः कृञश्च क्वनिबित्यर्थः। ननु युधेरकर्मकत्वात् तत्र कर्मण्युपपदे इत्यस्य कथमन्वय इत्यत आह युधिरन्तर्भावितेति। राजकृत्वेति। राजानं कृतवानित्यर्थः। सहे च। सहशब्दे उपपदे युधिकृञ्भ्यां क्वनिबित्यर्थः। सप्तम्यां जनेर्डः। सप्तम्यन्ते उपपदे जनेः भूतार्थाड्ड इत्यर्थः। सरसिजमिति। डित्त्वसामर्थ्यादभस्यापि टेर्लोपः। 'हलदन्तात्-' इति 'तत्पुरुषे। कृति-' इति वा अलुक्। मन्दुरज इति। 'वाजिशाला तु मन्दुरा' इत्यमरः पञ्चम्यामजातौ। जनेरिति। भूतार्थादिति शेषः। संस्कारजमिति। संस्काराज्जातमित्यर्थः। उपसर्गे च। जनेर्ड इति शेषः। संज्ञायामिति समुदायोपाधिः। अनौ कर्मणि। ननु जनेरकर्मकत्वात्तत्र कर्मण्युपपदे इत्यर्थस्य कथमन्वय इत्यत आह पुमांसमनुरुध्येति। अनुरुध्य जननं धात्वर्थ इति भावः। पुमनुजेति। पुंस् इति पूर्वपदे संयोगान्तलोप इति भावः। अन्येष्वपि दृश्यते। अज इति।

---

पश्यन्ति विश्वदृश्वानि तानि नयनानि येषां ते विश्वदृश्वनयना इत्येवं क्वनिबन्तस्य लटा विग्रहेऽपि न क्षतिः। प्रत्ययान्तरनिवृत्त्यर्थं सूत्रमित्येवं वृत्तिकारादिभिर्व्याख्यातत्वात्। कालान्तरनिवृत्त्यर्थमिदमिति कैरप्यभियुक्तैरनुक्तत्वादिति दिक्। राजनि युधि कृञः। सहे च। इदमपि सूत्रद्वयं 'दृशेः क्वनिप्' इतिवन्नियमार्थमिति न्यासः। वस्तुतस्तु दृशिग्रहणेन निर्वाहस्यागतिकत्वादियं त्रिसूत्री विधात्रीत्यपि सुवचम्। प्राचां ग्रन्थास्त्विहोदासीना एवेति शब्दकौस्तुभे स्थितम्। मन्दुरायामिति। 'वाजिशाला तु मन्दुरा' इत्यमरः। पुमनुजेति। इह जनिः सकर्मकः, अनुरोधविशिष्टजननवृत्तित्वात्। अन्येष्वपि दृश्यते। 'सप्तम्यां जनेः-' इत्युक्तमसप्तम्यामपि दृश्यत इत्यजः। द्विज इति। न जायत इत्यजः, द्विर्जातो द्विजः, 'जन्मना जायते

। ब्राह्मणजः। अपिशब्दः सर्वोपाधिव्यभिचारार्थः, तेन धात्वन्तरादपि कारकान्तरेष्वपि क्वचित्, परितः खाता परिखा। **३०१२ क्तक्तवतू निष्ठा।** (१-१-२६) एतौ निष्ठासंज्ञौ स्तः। **३०१३ निष्ठा।** (३-२-१०२) भूतार्थवृत्तेर्धातोर्निष्ठा स्यात्। तत्र 'तयोरेव–' (सू २८३३) इति भावकर्मणोः क्तः। 'कर्तरि कृत्' (सू २८३२) इति कर्तरि क्तवतुः। उकावितौ। स्नातं मया। स्तुतस्त्वया विष्णुः। विष्णुर्विश्वं कृतवान्। **३०१४ निष्ठायामण्यदर्थे।** (६-४-६०) ण्यदर्थौ भावकर्मणी, ततोऽन्यत्र निष्ठायां क्षियो दीर्घः स्यात्।

---

न जात इत्यर्थः। **द्विजो ब्राह्मण इति।** द्विर्जात इत्यर्थः। 'मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात्' इत्यादिस्मृतेरिति भावः। **अपिशब्द इति।** 'सप्तम्यां जनेर्डः' इत्यादिसूत्रेषु डविधिषु यानि विशेषणान्युपात्तानि प्रकृतिविशेषरूपाणि भूते कर्तरीति प्रत्ययार्थविशेषणं च तदतिक्रमार्थ इत्यर्थः। **क्तक्तवतू निष्ठा।** क्त, क्तवतु अनयोर्द्वन्द्वः। निष्ठेति प्रत्येकाभिप्रायमेकवचनम्। **निष्ठा।** भूते इति धातोरिति चाधिकृतम्, तदाह **भूतार्थेत्यादि। भावकर्मणोः। क्त इति।** तथा च क्तप्रत्ययविषये कर्तरीति न संबध्यते इति भावः। **कर्तरि क्तवतुरिति।** कृत्यक्तखलर्थानामेव भावकर्मणोर्विधानादिति भावः। 'तयोरेव कृत्यक्त–' इत्यत्र 'लः कर्मणि–' इत्यस्मात् सकर्मकेभ्यः कर्मणि कर्तरि च अकर्मकेभ्यो भावे कर्तरि चेत्यनुवर्तते। ततश्च अकर्मकेभ्यो भावे क्तः, सकर्मकेभ्यस्तु कर्मणीति व्यवस्था लभ्यते इति मत्वोदाहरति **स्नातं मयेति।** अकर्मकत्वाद् भावे क्तः। **स्तुतस्त्वया विष्णुरिति।** सकर्मकत्वात् कर्मणि क्तः। कर्तरि क्तवतुमुदाहरति **विष्णुर्विश्वं कृतवानिति। निष्ठायामण्यदर्थे। ण्यदर्थौ भावकर्मणी इति।** 'ऋहलोः–' इति ण्यतः कृत्यसंज्ञकस्य तयोरेवेति भावकर्मणोरेव प्रवृत्तेरिति भावः। **ततोऽन्य-**

---

शूद्रः कर्मणा जायते द्विजः' इत्यभियुक्तोक्तेः। 'पञ्चम्यामजातौ' इत्युक्तं जातावपि दृश्यत इत्याह **ब्राह्मणज इति। अपिशब्द इति।** यत्तु 'अन्तात्यन्ताध्व–' इति प्रकरणे 'अन्यत्रापि दृश्यते' इत्युपसंख्यातं तद्भूतकालं वि[illegible] यथा स्यादित्येवमर्थम्। वस्तुतस्तु प्रकृतसूत्रस्थस्यापिग्रहणस्य सर्वोपाधिव्यभिचारा[illegible]त्वात्तद्वार्तिकमनेनैव गतार्थम्। विभावितं चेदम् 'इको गुणवृद्धी' इति सूत्रे जनेर्डं प्रकम्य 'गमेरप्ययं डो वक्तव्यः' इति वदता भाष्यकारेण। एवं च प्रकृतसूत्रस्थम् 'अन्येभ्योऽपि दृश्यते' इति वार्तिकमपि गतार्थमिति बोध्यम्। **क्तक्तवतू निष्ठा।** ननु क्तक्तवत्वोः सिद्धयोर्निष्ठेति संज्ञासिद्धिः, सिद्धायां निष्ठासंज्ञायां क्तक्तवत्वोर्विधानमित्यन्योन्याश्रय इति चेत्। अत्राहुः—भाविनी संज्ञाऽत्र विज्ञायत स भूते भवति यस्योत्पन्नस्य निष्ठेति संज्ञा भवति

**३०१५ क्षियो दीर्घात् । ( ८-२-४६ )** दीर्घात् क्षियो निष्ठातस्य नः स्यात् । क्षीणवान् । भावकर्मणोस्तु क्षितः कामो मया । 'श्र्युकः किति' ( सू २३८१ ) श्रितः, श्रितवान् । भूतः, भूतवान् । क्षुतः । 'ऊर्णोतेर्नुवद्भावो वाच्यः' (वा १७२१)। तेन एकाच्त्वान्नेट् , ऊर्णुतः । नुतः । वृतः । **३०१६ रदाभ्यां निष्ठातो नः पूर्वस्य च दः । ( ८-२-४२ )** रेफदकाराभ्यां परस्य निष्ठातस्य नः स्यात् । निष्ठापेक्षया पूर्वस्य धातोर्दकारस्य च । शॄ, 'ॠत इत्-' ( सू

---

त्रेति । कर्तरीत्यर्थः । क्तवताविति फलितम् । **क्षियो दीर्घः स्यादिति** । क्षिय इति पूर्वसूत्रमनुवर्तते, 'युप्लुवोर्दीर्घश्छन्दसि' इत्यतो दीर्घ इति चेति भावः । **क्षियो दीर्घात्** । दीर्घादिति क्षियो विशेषणम्, तदाह **दीर्घात् क्षिय इति** । दीर्घान्तादित्यर्थः । **निष्ठातस्य न इति** । 'रदाभ्याम्-' इत्यतस्तदनुवृत्तेरिति भावः । **क्षीणवानिति** । क्षिधातोः कर्तरि क्तवतुः, 'निष्ठायामण्यदर्थे' इति दीर्घः , तकारस्य नत्वम्, षात्परत्वाण्णः । **क्षितः कामो मयेति** । क्षपित इत्यर्थः । 'क्षि क्षये' इत्यस्माद् अन्तर्भावितण्यर्थात्कर्मणि क्तः । भावे तु क्षितं कामेनेत्युदाहार्यम् । अत्र ण्यदर्थयोर्भावकर्मणोर्विहिते क्ते दीर्घो न भवति, अण्यदर्थ इत्युक्तेः । दीर्घान्तत्वाभावात् 'क्षियो दीर्घात्' इति नत्वं न । **श्र्युकः कितीति** । श्रित इत्यादौ इण्निषेधस्मारकमिदम् । **क्षुत इति** । 'टु क्षु शब्दे' अस्मात् क्तः । ननु ऊर्णुत इति कथम् ? अनेकाच्कत्वेन श्र्युक इति निषेधस्याप्रवृत्तेरित्यत आह **ऊर्णोतेर्नुवदिति** । वार्तिकमिदम् । **रदाभ्याम्** । रदाभ्यामित्यकारावुच्चारणार्थौ, तदाह **रेफदकाराभ्यामिति** । निष्ठायाः त् निष्ठात्, तस्य निष्ठात इति विग्रहः, तदाह **निष्ठातस्येति** । निष्ठातकारस्येत्यर्थः । **नः स्यादिति** । नकारः स्यादित्यर्थः । सूत्रे न इति प्रथमान्तम् । अकार उच्चारणार्थः । **दकारस्य चेति** । नकार इत्यनुषज्यते ।

---

इत्याश्रयणे सामर्थ्यात् क्तक्तवत्वोर्विधानमेतदिति नास्त्युक्तदोष इति । **ण्यदर्थो भावकर्मणी इति** । यद्यपि याज्या ऋगित्यादौ करणादावपि बाहुलकाण्ण्यद्भवति, तथापि 'तयोरेव-' इति वचनाद्भावकर्मणी एव साक्षादुपात्तोऽर्थ इति स एवेह विवक्षित इति भावः । **क्षियो** । क्षि क्षये, क्षि निवासगत्योः, द्वयोरपि ग्रहणम् । **क्षितः काम इति** । अन्तर्भावितण्यर्थत्वेन सकर्मकत्वात्कर्मणि क्तः । एतच्च 'अक्षितोत सनेदिमम्' इति मन्त्रव्याख्यायां माधवग्रन्थे स्पष्टम् । भावे तु क्षितं कामेनेत्याद्युदाहरणीयम् । इण्निषेधसूत्रं स्मारयति **श्र्युकः कितीति** । **क्षुत इति** । टुक्षु शब्दे । **नुत इति** । णु स्तुतौ । **वृत इति** । वृङ् संभक्तौ, वृञ् वरणे । **रदाभ्याम्** । इह रदाभ्यामित्यनेन तकारो विशेष्यते न निष्ठा, तेन चरितमुदितमित्यत्र

२३१० ) रपरः, णत्वम्, शीर्णः । बहिरङ्गत्वेन वृद्धेरसिद्धत्वान्नेह-कृतस्यापत्यं कार्तिः । छिन्नः । भिन्नः । ३०१७ संयोगादेरातो धातोर्यण्वतः । (८-२-४३) निष्ठातस्य नः स्यात् । द्राणः । स्त्यानः । ग्लानः । ३०१८ ल्वादिभ्यः । (८-२-४४) एकविंशतेर्लूञादिभ्यः प्राग्वत् । लूनः । ज्या, 'ग्रहिज्या-' (सू २४१२) जीनः । 'दुग्वोर्दीर्घश्च' (वा ४८३२) 'दु गतौ' दूनः । 'दु दु उपतापे' इत्ययं तु न गृह्यते, सानुबन्धकत्वात् । 'मृदुतया दुतया' इति माघः । गूनः । 'पूञो विनाशे' (वा ४८३३) । पूना यवाः, विनष्टा इत्यर्थः । पूतमन्यत् । 'सिनोतेर्ग्रासकर्मकर्तृकस्य' (वा ४८३४) । सिनो ग्रासः । ग्रास इति

---

सूत्रे द इति षष्ठ्यन्तमिति भावः । चरितम् उदितम् इत्यत्र तु नत्वं न, निष्ठातकारस्य इटा व्यवहितत्वेन रदाभ्यां परत्वाभावात् । रेफात्परस्योदाहरति शॄ इति । शॄधातोः क्तप्रत्ययसूचनमिदम् । ननु कृतस्यापत्यं कार्तिः । अत इञ्, आदिवृद्धिः, रपरत्वम् । अत्र निष्ठातकारस्य रेफात् परस्य नत्वं स्यादित्यत आह बहिरङ्गत्वेनेति । दात्परस्योदाहरति छिन्नो भिन्न इति । अत्र निष्ठातकारस्य धात्वन्तदकारस्य च नत्वमिति भावः । संयोगादेः । निष्ठातस्य नः स्यादिति । शेषपूरणमिदम् । द्राण इति । 'द्रा कुत्सायां गतौ' अस्मात् क्तः, नत्वम् णत्वम् । ग्लान इति । 'ग्लै हर्षक्षये' 'आदेचः-' इत्यात्वे नत्वम् । ल्वादिभ्यः । एकविंशतेरिति । क्र्यादिषु प्वादयो द्वाविंशतिः, तेषु आद्यं पूञं विहाय ल्वादिभ्य एकविंशतेरित्यर्थः । ज्येति । धातुसूचनम् । ग्रहिज्येति । संप्रसारणसूचनम् । जीन इति । ज्या त इति स्थिते 'संयोगादेः-' इति निष्ठानत्वस्यासिद्धत्वात् ततः प्रागेव संप्रसारणे पूर्वरूपे च कृते आतः परत्वाभावात् 'संयोगादेरातः-' इति नत्वस्याप्राप्तावनेन नत्वम् । दुग्वोर्दीर्घश्चेति । वार्तिकमिदम् । दु गु आभ्यां परस्य निष्ठातस्य नत्वं प्रकृतेर्दीर्घश्च इत्यर्थः । 'मृदुतया दुतया' इति माघकाव्ये दुतशब्दं साधयितुमाह टु दु उपतापे इत्यादि । गून इति । गुधातोः क्ते दीर्घः । पूञो विनाशे इति । वार्तिकमिदम्

---

न, तकारस्येटा व्यवहितत्वात्तदेतदाह परस्य निष्ठातस्येति । बहिरङ्गत्वेनेति । निष्ठातकाराद्बहिर्भूततद्धितञित्प्रत्ययमाश्रित्याङ्गस्यादेरचो विधीयमानत्वाद् वृद्धिर्बहिरङ्गेति भावः । द्राण इति । द्रा कुत्सायां गतौ । ग्लानः । म्लान इति । ग्लै म्लै हर्षक्षये । एकविंशतेरिति । क्र्यादिषु प्वादयो द्वाविंशतिः पठ्यन्ते, तत्र पूञं विहाय ल्वादयो ज्ञेयाः । जीन इति । 'हल इति दीर्घः । सिद्धत्वान्नित्यत्वाच्च 'ग्रहिज्या-' इति संप्रसारणे कृते 'संयोगादेरातः-' इत्यस्याप्राप्तिः । गून इति । गु पुरीषोत्सर्गे । विनष्टा इति । धातूनामनेकार्थत्वात्पूञ् पवन इत्यस्य विनाशेऽपि

किम्-सिता पाशेन सूकरी। कर्मकर्तृकस्य इति किम्-सितो ग्रासो देवदत्तेन। ३०१९ ओदितश्च (८-२-४५) भुजो, भुग्नः। टु ओ श्वि, उच्छूनः। ओ हाक्, प्रहीणः। 'स्वादय ओदितः' इत्युक्तम्। सूनः, सूनवान्। दूनः, दूनवान्। ओदिन्मध्ये डीङः पाठसामर्थ्यान्नेट्, उड्डीनः। ३०२० द्रवमूर्तिस्पर्शयोः श्यः। (६-१-२४) द्रवस्य मूर्तौ काठिन्ये, स्पर्शे चार्थे श्यैङः संप्रसारणं स्यान्निष्ठायाम्। ३०२१ श्योऽस्पर्शे। (८-२-४७) श्यैङो निष्ठा-

---

विनाशार्थात् पूञः परस्य निष्ठातस्य नत्वमित्यर्थः। **सिनोतेरिति**। वार्तिकमिदम्। कर्मैव कर्ता कर्मकर्ता, ग्रासः कर्मकर्ता यस्य स ग्रासकर्मकर्तृकः, तस्मात् 'षिञ् बन्धने' इत्यस्मात्परस्य निष्ठातस्य नत्वमित्यर्थः। **ओदितश्च**। ओकारेतो धातोः परस्य निष्ठातस्य नत्वमित्यर्थः। **भुग्न इति**। नत्वस्यासिद्धत्वाद् जस्य पूर्वं कुत्वम्। ततो नत्वम्। **उच्छून इति**। उत्पूर्वात् 'टु ओ श्वि' इति धातोः क्तः, यजादित्वात्संप्रसारणम्, पूर्वरूपम्, 'श्वीदितः-' इति नेट्, हल इति दीर्घः, निष्ठानत्वम्। **प्रहीण इति**। 'घुमास्था-' इति ईत्वम्, नत्वम्, 'कृत्यचः' इति णत्वम्। **स्वादय इति**। 'षूङ् प्राणिप्रसवे' इत्याद्या नव धातव ओदित इति दिवादिगणे उक्तमित्यर्थः। **सून इति**। षूङः क्तः, नत्वं 'श्र्युकः किति' इति इण्निषेधः। **दून इति**। 'दूङ् परितापे' अस्मात् क्तः, स्वादित्वेन ओदित्त्वान्नत्वम्। ननु 'डीङ् विहायसा गतौ' इत्यस्य उड्डीन इति कथं रूपम्, सेट्कत्वाद् उगन्तत्वाभावेन 'श्र्युकः किति' इति निषेधस्याप्रवृत्तेरित्यत आह **ओदिन्मध्ये डीङः पाठसामर्थ्यान्नेडिति**। इटि सति निष्ठातस्य ओदितो डीङः परत्वाभावान्नत्वाप्रसक्तेस्तस्य ओदित्सु पाठो व्यर्थः स्यादित्यर्थः। **द्रवमूर्ति**। 'श्यैङ् गतौ' इत्यस्य कृतात्वस्य श्य इति षष्ठी। द्रवमूर्तिश्च

---

वृत्तिः। **सिनोतेरिति**। षिञ्बन्धने। ग्रासरूपं कर्म ग्रासकर्म तत्कर्तृ यस्य सिनोतेस्ततः परस्य निष्ठातस्य नः स्यादित्यर्थः। **सिनो ग्रास इति**। पिण्डीक्रियमाणो ग्रासो यदा दध्यादिव्यञ्जनवशाद् बन्धनेऽनुकूलो भवति तदा कर्मण एव कर्तृत्वमिति बोध्यम्। **ग्रासेति किमिति**। ग्रासकर्मकर्तृकस्येति किमर्थमित्यर्थः। **कर्मकर्तृकेति। किमिति**। ग्रासकर्मकस्येत्येवास्तु कर्तृपदं किमर्थमित्यर्थः। कर्मपदं विहाय ग्रासकर्तृकस्येत्युक्तौ तु ग्रासेन कण्ठः सित इत्यत्रापि स्यादिति बोध्यम्। **भुग्न इति**। भुजो कौटिल्ये। नत्वस्यासिद्धत्वाद् झलि परतः कुत्वम्। **उच्छून इति**। श्वयतेर्यजादित्वात्संप्रसारणे पूर्वरूपे च 'हलः' इति दीर्घः। **प्रहीण इति**। 'घुमास्था-' इति ईत्वम्। **सून इति**। षूङ् प्राणिप्रसवे। **दून इति**। दूङ् परितापे। **ओदिन्मध्ये इति**। यदि डीङ इट् स्यात्तर्हि धातोः परो निष्ठातकारो न संभवतीति

तस्य नः स्यादस्पर्शेऽर्थे । 'हलः' ( सू २५५६ ) इति दीर्घः । शीनं घृतम् । अस्पर्शे किम्-शीतं जलम् । द्रवमूर्तिस्पर्शयोः किम्-संश्यानो वृश्चिकः । शीतात्संकुचित इत्यर्थः । ३०२२ प्रतेश्च । ( ६-१-२५ ) प्रतिपूर्वस्य श्यः संप्रसारणं स्यान्निष्ठायाम् । प्रतिशीनः । ३०२३ विभाषाभ्यवपूर्वस्य । ( ६-१-२६ ) श्यः संप्रसारणं वा स्यात् । अभिश्यानम् अभिशीनं घृतम् । अवश्यानः अवशीनो वृश्चिकः । व्यवस्थितविभाषेयम् । तेनेह न, समवश्यानः । ३०२४ अञ्चोऽनपादाने । ( ८-२-४८ ) अञ्चो निष्ठातस्य नः स्यान्न त्वपा-

---

स्पर्शश्चेति विग्रहः । मूर्तावित्यस्य विवरणम् काठिन्य इति । संप्रसारणं स्यादिति । 'ष्यङः संप्रसारणम्' इत्यतस्तदनुवृत्तेरिति भावः । तथा च श्यैङः क्ते आत्वे संप्रसारणे पूर्वरूपे शित इति स्थिते श्योऽस्पर्शे । श्यः अस्पर्शे इति च्छेदः । दीर्घ इति । नत्वात्प्रागेव 'हलः' इति दीर्घ इत्युचितम्, नत्वस्य त्रैपादिकत्वात् । शीनं घृतमिति । घनीभूतमित्यर्थः । धातूनामनेकार्थत्वात् । यद्यपि घृतेऽप्यनुष्णस्पर्शोऽस्त्येव । तथापि शीताख्यस्पर्शविशेष एव विवक्षित इति भावः। अस्पर्शे किमिति । श्यैङो निष्ठातस्य नत्वं स्यादित्येतावदेवास्त्वित्यर्थः । शीतं जलमिति । शीतस्पर्शवदित्यर्थः । अत्र 'द्रवमूर्ति–' इति संप्रसारणमेव, न तु निष्ठानत्वमित्यर्थः । एवं च 'द्रवमूर्तिस्पर्शयोः–' इत्यस्य स्पर्शे इदमुदाहरणम् । 'श्योऽस्पर्शे' इत्यस्य तु प्रत्युदाहरणमिति बोध्यम् । सूत्रयोः स्पर्शशब्दः प्रधानभूते गुणभूते च वर्तते । तत्र गुणभूते विशेष्यनिघ्नः । शीता आपः, शीतं जलमित्यादि । यदा तु स्पर्शविशेषो गुणः प्राधान्येन विवक्षितः तदा क्लीबत्वमेव । 'शीतं गुणे' इत्यमरः। संप्रसारणविधौ पृच्छति द्रवमूर्तिस्पर्शयोःकिमिति। संश्यान इति। अत्र स्पर्शस्याप्रतीतेः न संप्रसारणम्। नत्वं तु भवत्येवेति भावः। प्रतेश्च । द्रवमूर्तिस्पर्शाभ्यामन्यत्रापि संप्रसारणप्राप्त्यर्थमिदम्। प्रतिशीन इति । प्रतिगत इत्यर्थः । अत्र 'श्योऽस्पर्शे' इति नत्वम् । विभाषा । श्यैङ इति शेषः । संप्रसारणं वा स्यादिति । शेषपूरणमिदम् । द्रवमूर्तिस्पर्शयोर्नित्यं संप्रसारणे प्राप्ते ततोऽन्यत्राप्राप्ते विभाषेयम् । अभिश्यानं घृतमिति । अत्र द्रवमूर्तौ संप्रसारणविकल्पः । अवश्यानः, अवशीनो वृश्चिक इति । अत्र द्रवमूर्तिस्पर्शाभावेऽपि संप्रसारणविकल्पः । समवश्यान इत्यत्रापि संप्रसारणविकल्पमाशङ्क्याह

---

नत्वार्थः पाठोऽनर्थकः स्यादिति भावः । न च ओदिन्मध्ये पाठसामर्थ्यादिटा व्यवधाने नत्वं भवेदिति वैपरीत्यं किं न स्यादिति शङ्क्यम्, लक्ष्यानुरोधेन इडभावकल्पनाया एव न्याय्यत्वात् । अन्ये तु सत्यपि इडागमे सवर्णदीर्घे चैकादेशस्य पूर्वान्तत्वेन ग्रहणादिटा व्यवधानं नास्त्येवेतीष्टं सिध्यतीत्याहुः । संश्यान इति । श्यैङ

